**चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो हेतुं चानुब्रुवतो मे निबोध।**
**क्षात्राद्धर्माद्धीयते पाण्डुपुत्रस्तं त्वं राजन्! राजधर्मे नियुङ्क्ष्व॥ २९॥**

**अन्वयः**—चातुर्वर्ण्यस्य एषः धर्मः तव उक्तः, अनुब्रुवतः च मे हेतुं निबोध। हे राजन्! पाण्डुपुत्रः क्षात्रात् धर्मात् हीयते, त्वं तं राजधर्मे नियुङ्क्ष्व।

**अर्थः**—उपसंहरन्नाह—**चातुर्वर्ण्यस्येति**। चातुर्वर्ण्यस्य चत्वारश्च ते वर्णाश्च चतुर्वर्णाः त एव चातुर्वर्ण्यं स्वार्थे ष्यञ्, तस्य = ब्राह्मणादिकस्य, एषः = अयं, धर्मः = आचारः, तव = ते त्वामुद्दिश्येति यावत्, उक्तः = कथितः मयेति शेषः, अनुब्रुवतः = कथयतः, मे = मम भक्त इत्यर्थः, हेतुं = कारणं, 'हेतुर्ना कारणं बीज'मित्यमरः, निबोध=जानीहि, हे राजन्! = हे भूप! पाण्डुपुत्रः = युधिष्ठिरः, क्षात्रात् = क्षत्रियसम्बन्धिनः, धर्मात् = आचारात्, हीयते = हीनो भवति, त्वं = भवान्, तं = युधिष्ठिरं, राजधर्मे = राजोचितकर्मणि पृथ्वीपालनादिरूपे, नियुङ्क्ष्व = स्थापय।

**भावार्थः**—विदुरो धृतराष्ट्रं प्रति सारभूतमर्थं कथयति—चातुर्वर्ण्यस्य धर्मो मयोक्तस्त्वया सम्यग् विविच्यताम्। धर्मराजस्तु सम्प्रति क्षात्रधर्महीनो वर्ततेऽतस्तं राज्ये नियुज्य तथुक्तं विधेहीति॥

**भाषा**—हे राजन्! चारों वर्णों के इस धर्म को जो मैंने आपसे कहा है उसके कारण को भी मैं आपसे कह रहा हूँ, उसे समझ लीजिए। युधिष्ठिर क्षत्रिय के धर्म (राज्यशासन) से हीन हो रहे हैं, इसलिए आप उन्हें राजा के कर्तव्य (राज्यशासन) में लगा दीजिए॥२९॥

**धृतराष्ट्र उवाच**—धृतराष्ट्रः=कुरुपतिः, उवाच=विदुरोक्तं सर्वं निशम्य कथितवान्।

**एवमेतद्यथा त्वं मामनुशाससि नित्यदा।**
**ममापि च मतिः सौम्य! भवत्येवं यथात्थ माम्॥ ३०॥**

**अन्वयः**—हे सौम्य! एतत् एवम्, यथा त्वं मां नित्यदा अनुशाससि, मम अपि मतिः एवं भवति, यथा आत्थ।

**अर्थः**—विदुरोक्तं स्वीकुर्वन्निव धृतराष्ट्रः प्रतिपादयति—**एवमिति**। हे सौम्य!=हे साधो विदुर! एतत्=इदम्, एवम् = ईदृगेवास्ति, यथा=येन प्रकारेण, त्वं=भवान्, मां=मा, नित्यदा =सदा 'सर्वैकान्यकियत्तदः काले दा' इति सप्तम्याः स्थाने दादेशः, अनुशाससि=अनुशास्सि शिक्षयसीत्यर्थः, आर्षोऽयं प्रयोगः, मम अपि=मेऽपि, मतिः=बुद्धिः, एवम्=ईदृशी, भवति, यथा= यादृक्, त्वम्, आत्थ=ब्रवीषि, 'णलः पञ्चानामादित आहो ब्रुवः' इति शासनेन परस्मैपदे लटि ब्रूधातोराद्येषु पञ्चसु तिवादिषु आहादेशे रूपमिदम्।

**भावार्थः**—त्वदनुशासनवचनानुरूपं ममापि बुद्धिर्भवति, सत्यं न्याय्यं च तदस्तीति॥

**भाषा**—धृतराष्ट्र बोले—हे सौम्य! आप जो मुझे नित्य उपदेश देते हैं वह सब ठीक है और आप जैसा मुझसे कह रहे हैं वैसा ही मेरा भी विचार है॥ ३०॥

**सा तु बुद्धिः कृताप्येवं पाण्डवान् प्रति मे सदा।**
**दुर्योधनं समासाद्य पुनर्विपरिवर्तते॥ ३१॥**

**अन्वयः**-तु पाण्डवान् प्रति सदा एवं कृता अपि मे सा बुद्धिः दुर्योधनं समासाद्य पुनः विपरिवर्तते।

**अर्थः**—स्वबुद्धेरस्थैर्यं प्रकटयन् पुनराह-**सा तु बुद्धिरिति** । तु=किन्तु, पाण्डवान् प्रति= पाण्डुपुत्रान् युधिष्ठिरादीन् उद्दिश्य, सदा=सर्वदा, एवं=पूर्वोक्तप्रकारेण, कृता अपि=विहितापि स्थिरतां नीतापीति यावत् , मे=मम, सा=पाण्डवपक्षपातिनी, बुद्धिः=मतिः 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मति'रित्यमरः, दुर्योधनं=ज्येष्ठं स्वपुत्रं, समासाद्य=प्राप्य दुर्योधनं लक्षीकृत्येति यावत् , पुनः=भूयः, विपरिवर्तते=विपरीता भवतीत्यर्थः।

**भावार्थः**—विचारेण पाण्डवाभिमुख्यपि मे मतिः सहसा सुयोधनमुपगता तद्वैपरीत्यमेव भजत इति ॥

**भाषा**—परन्तु पाण्डवों के प्रति इसभाँति सदा निश्चित किया गया मेरा विचार दुर्योधन के सामने फिर बदल जाता है ॥ ३१ ॥

**न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् ।**
**दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ३२ ॥**

इति श्रीमहाभारते उद्योगपर्वणि प्रजागरपर्वणि विदुरनीतौ अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

**अन्वयः**—केनचित् भूतेन दिष्टम् अभ्यतिक्रान्तुं न शक्यम् , दिष्टम् एव ध्रुवं मन्ये, पौरुषं तु निरर्थकं मन्ये ।

**अर्थः**—दैवमेव सर्वतो बलवत्तममिति स्वविचारं प्रकटयति-न **दिष्टमिति** । केनचित्= केनापि, भूतेन=प्राणिना, 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः, दिष्टं=दैवं भाग्यमिति यावत् , 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि'रित्यमरः, अभ्यतिक्रान्तुं = उल्लङ्घयितुं, न शक्यं=न शक्यत इति यावत्, दिष्टम् एव=दैवमेव, ध्रुवं=निश्चितं 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिष्वि'त्यमरः, मन्ये=जानामि, पौरुषं तु=पुरुषार्थस्तु 'पुंभावे तत्क्रियायां च पौरुष'मिति कोषः, निरर्थकं=मोघं 'मोघं निरर्थक'मित्यमरः, असफलं व्यर्थमिति यावत्, मन्ये।

**भावार्थः**—दैवमेव सर्वतो बलीयस्तल्लङ्घने न कस्यापि सामर्थ्यमतो न पौरुषं बहु मन्य इति॥

इति होशिङ्गजगन्नाथशास्त्रिविनिर्मितायां तत्त्वदर्शिन्याख्यायां विदुरनीति-
व्याख्यायामष्टमोऽध्यायः समाप्तः ।

**भाषा**—प्रारब्ध का उल्लङ्घन किसी भी प्राणी के द्वारा नहीं किया जा सकता, ( इसलिए ) मैं प्रारब्ध को ही अटल और पुरुषार्थ को निरर्थक समझता हूँ ॥ ३२ ॥

श्री अनन्तरामशास्त्री वेताल कृत विदुरनीति की हिन्दी भाषाटीका
सरलार्थबोधिनी का अष्टम अध्याय समाप्त ।

होशिङ्गान्वयविश्वनाथचरणश्रीलाऽन्नपूर्णाजनेः श्रीमल्लक्ष्मणभालचन्द्रविबुधोत्तंसाप्तबोधश्रियः ।
काशीस्थस्य कृतौ यथामति जगन्नाथस्य पूर्तिं गता व्याख्या श्रीविदुरस्य नीतिनिचये तत्त्वार्थदर्शिन्यसौ॥
रसनिधिनन्दक्षणदापतिसम्मितवर्षकेऽधिके नभसि । शुक्ले पर्वणि सोमे पूर्णाऽभूद्विदुरनीतिटीकेयम् ॥

# समाप्ता चेयं विदुरनीतिः ।